**हारिद्रशूलकम्** । सू. ७. दारुहरिद्राकाष्ठकृतं शूलम् । हारिद्रसीसकमिति चरकपाठः । हिं.—दारुहलदीकी सींक ; मल.—मरमञ्ञळ्क्कोल् മരമഞ്ഞൾക്കോൽ ; इं.—Culm of the tree-turmeric । कदंबकाष्ठेन कृतं शूलमिति चरकांग्लेयानुवादकः ॥

**हारीतः** । सू. ६ etc. हारि मनोहरं इतं गमनमस्य । हरिद्रावर्णः प्रतुदपक्षिभेदः । हारितालपक्षी । "हारीतः पक्षिभेदे स्यान्मुनिभेदे च कैतवे" इति मेदिनी । हारिद्रक इति केषांचन पाठः । हिं.—हरियल, हारील ; त.—पच्चैप्पुरा ; म.—तिलागिरूपक्षी ; मल.—चूळप्रावु ചൂളപ്രാവ്, पच्चप्रावु, पोणा, पूणा, पोकिणा ; इं.—Green pigeon ; Wood pigeon इत्येके ; ल.—*Crocopus* । The green pigeon, said to remain always on the highest trees । हरितपीतवर्ण इति डल्हणः । "हारीतो रक्तपीतः स्याद्धरितोऽपि स कथ्यते" इति भावमिश्रः । अरुणकपोत इति भास्करव्याख्या । **मांसगुणाः**—"हरितालोऽल्पविट्कः स्यात् कषायो विशदो लघुः । रक्तपित्तप्रशमनस्तृष्णाघ्नो वातकोपनः" । रा. व । "हारीतपललं स्वादु कफपित्तास्रदोषजित्" । रा. नि ॥

**हालाहलम्** । उ. ३५. हालेव हलति । **कन्दविषभेदः** । स्थावरविषाणि दशविधानि । **उक्तं हि**—"मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" इति । "कालकूटवत्सनाभसर्षपपालककर्दमकवैराटकमुस्तकशृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्दविषाणि" इति सुश्रुतः । **स्वरूपं यथा**—"गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा । तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः । असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये । दक्षिणाब्धितटे देशे कोंकणेऽपि च जायते" । रा. नि । "चिरेणोच्छ्वसिति श्यावो

नरो हालाहलेन वै" इति सुश्रुतः ॥

हिंस्रा । चि. १ etc. मांसी ॥

हिंगु । सू. ६ etc. हिनोति । 'हि गतौ वृद्धौ च' । हिमं गच्छति वा । स्वनामख्यातपण्यद्रव्यम् । N. O.—*Umbelliferae* । हिं.—हींग, हिंगु ; बं.—हिङ् ; उर्दु.—हिंगु ; म.—हिंग, इंगु ; गु.—वघारनी, हिंग ; दखा.—हिंग ; पञ्जा.—हिंग ; कों.—हिंगझाड ; काश्मी.—याङ् ; सिन्धी.—वघायनी, वघारनी ; तै.—इंगुवा, रामठं ; क.—इंगु, इंगिन, हिंगळद, हिंगु, लेसु ; त.—पेरुंकायं, इरामटं, उरुंपरं ; तु.—इंग् ; सिं.—पेरुंकायं ; मल.—पेरुंकायं പെരുങ്കായം ; बर्मा.—शिङ्गा, सिंगु ; मलायी.—हिंगु ; अ.—हिलतीत, हिलसीत, तृयिब (Tyib) ; फा.—अंगझ, अंगुझा खालीस, अंगुष्टगन्धा ; फ्र.—Ferule Asafoetida ; जर्मन्.—Stinkendes Steckenkrant ; इं.—Asafoetida ; ल.—*Ferula Asafoetida, F. Narthex* । This small plant grows wild in Punjab, Cashmere, Persia and Afganistan. The gum-resin (asafoetida) obtained by incision from the root । नामानि—"हिंगु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् । अगूढगन्धं बाह्लीकं जरणं सूपधूपनम्" । ध. नि । गुणाः—"हृद्यं हिंगु कटूष्णं च क्रिमिवातकफापहम् । विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मनाशनम्" । रा. नि । "हिंगूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत् । शूलगुल्मोदरानाहक्रिमिघ्नं पित्तवर्धनम्" । भा. प्र । "लघूष्णं पाचनं हिंगु दीपनं कफवातजित् । कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत्" । सु. सू. ४६. अ । शोधितं ग्राह्यम् । शोधनविधिः—"अङ्गारस्थे लोहपात्रे सघृते रामठं क्षिपेत् । चालयेत् किञ्चिदारक्तवर्णं योगेषु योजयेत्" । आ. सं ॥

हिंगुजटा । उ. ६. वाष्पिका ॥

हिमम् । सू. २० etc. चन्दनम् । "चन्दने तुहिने हिमम् । कर्पूरे तु पुमान शीतगुणेऽपि त्रिषु तद्वति । हिमा तु स्त्री निशीथिन्या"मिति केशवस्वामी । "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः" इति मेदिनी ॥

हिमवद्गिरिसंभूता । उ. ३६. सोमराजीपदस्य विशेषणम् । श्वेतवचेतीन्दुः ॥

हिरण्यम् । उ. ५. कनकम् । उत्तरपञ्चमाध्याये नागकेसरमित्येके ॥

हिरण्यजं किट्टम् । चि. १६. सुवर्णमलम् । रूप्योत्थं मलमित्यरुणदत्तः । सुवर्णमाक्षिकमित्येके ॥

हिरण्यपुष्पी । शा. १. लांगली । कलिकारिकेति डल्हणः । स्वर्णकेतकीति हाराणचन्द्रः । काञ्चनक्षीरीत्यर्थेन शिवदीपिका । मुशलीति पाठ्यकारः । आरग्वध इत्यन्ये ॥

हुताशः । चि. १९. चित्रकः ॥

हृदयम् । चेतनास्थानम् । Heart । "दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत्" इति चरकः । "पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतश्च निमीलति" इति सुश्रुतः । "हृदयं नाम स्वतन्त्रपेशीनिर्मितं शून्योदरं यन्त्रम् । तद् अधोमुखबृहत्पद्ममुकुलाकारं, मध्यमाधरे फुस्फुसान्तराले पुरस्ताद्वामतस्तिर्यगवस्थितम्, हृदयधराख्येन कलाकोषेण प्रावृतं च । तस्य मूलदेशः दक्षिणतृतीयोपपर्शुकाया उरःफलकसन्धानादारभ्य वामद्वितीयोपपर्शुकाया उरःफलकसन्धानोपकण्ठं यावद्विस्तृतः । अग्रं तु तस्य वामतः पञ्चमषष्ठपर्शुकयोरन्तराले मध्यरेखाया बहिश्चतुरंगुलाद् दृश्यते, स्पर्शेनानुभूयते च नियतमाहन्यमानम्" । प्र. शा ॥

**ह्रस्वपञ्चमूलम्** । सू. ६ etc. **लघुपञ्चमूलम्** ॥

**हेम(न्)** । सू. ७ etc. **कनकम्** । विसर्पचिकित्सिते "शरैर्हेम्नापि वा हितः" इत्यत्र "शैलेर्हेन वा हितः" इत्येव चरकपाठः ॥

**हेम(न्)** । उ. २५. **नागकेसरम्** । पद्मकमित्येके । "कालीयकलताम्रास्थिहेमकालारसोत्तमै"रित्यत्र 'मञ्जिष्ठे'त्यर्थेन 'हेमकाला'मेकपदेन चक्रपाणिदत्तः व्याख्यायति ॥

**हेमचूर्णम्** । सू. ७. **सुवर्णभस्म** ॥

**हेमदुग्धा** । सू. १५. **काञ्चनक्षीरी** ॥

**हैमवती** । सू. १५. **श्वेतवचा** । "हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः" इति मेदिनी । "पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा" इति भावमिश्रः ॥

**हैयङ्गवीनम्** । उ. ३९. ह्योगोदोहोद्भवमिति । एकरात्रपर्युषितादन्नः सद्योजातं नवनीतम् । ह्यो दोहस्य विकारो नवनीतं, नवीननवनीतम् । "हविर्ह्यस्तनदुग्धोत्थं तत् स्याद्धैयङ्गवीनकम्" इति । हिं.—ताजा मक्खन ; म.—ताजे लोणी ; मल.—पुतुवेण्णा പുതുവെണ്ണ ; इं.—Fresh butter । "तत्तु हैयङ्गवीनं यद्ह्योगोदोहोद्भवं घृतम्" इति सिंहः । **गुणाः**—"हैयंगवीनं चक्षुष्यं दीपनं रुचिकृत्परम् । बलकृद् बृंहणं वृष्यं विशेषाज्ज्वरनाशनं" इति । see **नवनीतम्** ॥

**ह्रीबेरम्** । चि. १ etc. ह्रियै लज्जायै बेरमङ्गमस्य क्षुद्रत्वात् । **वालकम्** । रक्तपित्तचिकित्सिते पेयाकल्पने 'ह्रीबेर'मित्यत्र 'अंबु' इत्येव चरकपाठः ॥

पितामहोऽभून्मम रामवैद्यः
श्रीकुञ्जुमामिस्तु तदीयसूनुः ।
सुतोऽभवं तस्य च तत्पितृव्य-
नामाऽप्यहं केरललब्धजन्मा ॥

पितुः सकाशादवबुद्धशास्त्रो
यः सौगतः शङ्करसोदरश्च ।
स्वतन्त्रचिन्तानुगतप्रतीति-
र्माणिक्यनामाऽस्मि विदां विधेयः ॥

कोषात्मकोऽष्टाङ्गहृदो मयायु-
र्वेदौषधीदुर्ग्रहशब्दचर्चः ।
युगाब्धनागेन्दुशके प्रणीतो
मुदे बुधानां हृदयप्रकाशः ॥

इति वैद्यवरश्रीकुञ्जुमामिमहाशयात्मजश्रीमाणिक्य-
भिषग्विरचितो हृदयप्रकाशाभिध-
टिप्पणसहित अष्टांगहृदयकोषः समाप्तः ॥

## समाधिश्लोकः ।

शोणाजायाशकाब्दे ह्युदगयनयुतांऽगीरसे शुक्लपक्षे
पञ्चम्यामादिमर्क्षे मृगपतिकरणे फाल्गुने भौमवारे ।
ब्राह्माख्ये सन्मुहूर्ते वसुरसगवयः स्थूलकायं विहाय
प्रायात् श्रीकुञ्जुमामिर्भिषगमृतपदं ध्याननिष्ठो गुरुर्मे ॥